रङ्गेऽङ्गेऽसृङ्निषक्तं तव परिभवजस्यानलस्योपशान्त्यै ४१ ॥

बुद्धमतिके, क सा भानुमती योपहसति पाण्डवदारान् । भवति यज्ञवेदिसंभवे,

द्रौपदी—(क) आणवेदु णाहो ।

भीमसेनः—स्मरति भवती यत्तन्मयोक्तम् । ('चञ्चद्भुज-'(१।२१) इत्यादि पठति ।)

---

(क) आज्ञापयतु नाथः ।

---

ऊरू यस्य तस्य, कुरूणाम् , राज्ञः =दुर्योधनस्य, अपि, मम, अङ्गे अङ्गे= प्रत्यङ्गम् , निषक्तम् = व्याप्तम् , लिप्तमित्यर्थः । इदम् रुधिरम् , तव=द्रौप :, परिभवजस्य, तवेत्यस्यैकदेशेपरिभवेऽन्वयः । अभेदान्वयस्थल एवैकदेशान्वय-स्यासाधुत्वबोधनात् । अनलस्य =कोपाग्नेः, उपशान्त्यै, = शमनाय, भवतु । मदङ्गलिप्तरुधिरं दृष्ट्वा परिभवाग्निं शमयतु कथं पलायत इति भावः । स्रग्धरा छन्दः ॥ ४१ ॥

उपहसतीति—प्रथमाङ्कोक्तेन अयि याज्ञसेनि कस्मादिदानीमपीत्यावाक्येन या भानुमती पाण्डवदारानुपाहसत् सा सम्प्रति क्व वर्तत इत्यर्थः । इयं कथा ( ४० ) पृष्ठे द्रष्टव्या ।

भवती=त्वं द्रौपदी, स्मरणविषयमाह—चञ्चदिति । अयं प्रथमाङ्के— एकविंशश्लोके द्रष्टव्यः ।

द्वारा उद्दीप्त तुम्हारे क्रोधाग्नि की शान्ति के लिए है ॥ ४१ ॥

बुद्धिमतिके ! वह भानुमती कहाँ है जो पाण्डव वधुओं का उपहास करती है । अयि याज्ञसेनि !

द्रौपदी—नाथ क्या आज्ञा है ?

भीमसेन—क्या आप को स्मरण आ रहा है जो मैंने कहा था । ( चञ्च-द्भुज भ्रमित चण्डगदा०' अंक १ श्लो० सं० २१ को पढ़ता है )

द्रौपदी—नाथ ! केवल स्मरण ही नहीं कर रही हूँ किन्तु स्वामी के प्रसाद से अनुभव भी कर रही हूँ ।

द्रौपदी—(क) णाह, ण केवलं सुमरामि अणुहवामि अ णाधस्स प्पासदेण ।

भीमसेनः—(वेणीमवधूय ।) भवति, संयम्यतामिदानीं धार्तराष्ट्रकुल-कालरात्रिर्दुःशासनविलुलितेयं वेणी ।

द्रौपदी—(ख) णाह, विसुमरिदम्हि एदं वावारम् । णाहस्स पसादेण पुणो वि सिक्खिस्सम् ।

(भीमसेनो वेणीं बध्नाति ।)

---

(क) नाथ, न केवलं स्मरामि । अनुभवामि च नाथस्य प्रसादेन ।

(ख) नाथ, विस्मृतास्म्येतं व्यापारम् । नाथस्य प्रसादेन पुनरपि शिक्षिष्यामि ।

---

**अनुभवामीति**— प्रथमाङ्कस्थितैकविंशश्लोकप्रतिपादितभीमकर्तृकमत्केशावतंसनमनुभवामीत्यर्थः ।

**धार्तराष्ट्रकुलकालरात्रिः** = दुर्योधनवंशविनाशकरात्रितुल्या, **दुःशासनाविलुलिता** = दुःशासनेनाकृष्टा, **वेणी** = केशरचनाविशेषः ।

एतम् , **व्यापारम्** = केशबन्धनरूपक्रियाम् ।

**शिक्षिष्यामीति**— यद्यपि शिक्षधातुरनुदात्तेदात्मनेपदी तथापि चक्षिङो ङित्करणाज्ज्ञापितया **'अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम्'** इति परिभाषया परस्मैपदम् । अत एव शिशुपालवधकाव्ये चतुर्थसर्गे रैवतिकगिरिवर्णनपरके, **उदयति विततोर्ध्वरश्मिरज्जाविति**श्लोके,–उदयति' इति उत्पूर्वकादयधातोः परस्य लटः शत्रादेशः साधु सङ्गच्छते । केचित्तु—**'चान्द्रादयस्तु मन्यन्ते सर्वस्मादुभयपदम्'** इति न्यायसुधोक्तेश्चान्द्रमते सर्वेभ्यो धातुभ्य उभयपदं भवतीति 'शिक्षिष्यामि' इत्यत्र लृटः स्थाने परस्मैपदमिति वदन्ति । क्वचित्तु—'शिक्षिष्ये' इत्येव पाठो निवेशितः ।

---

**भीमसेन**—( वेणी को सुधार कर ) श्रीमति ! कौरवकुल के लिए कालरात्रि वेणी को, जो दुश्शासन के द्वारा बिखराई हुई है, अब आप बाँध लीजिए ।

**द्रौपदी**—नाथ ! इस कार्य को तो भूल ही गई हूँ । स्वामी के प्रसाद से फिर भी सीख लूँगी ।

( भीमसेन वेणी बाँधते हैं )

(नेपथ्ये ।)

**महासमरानलदग्धशेषाय स्वस्ति भवतु राजन्यकुलाय ।**
**क्रोधान्धैर्यस्य मोक्षात्क्षतनरपतिभिः पाण्डुपुत्रैः कृतानि**
**प्रत्याशं मुक्तकेशान्यनुदिनमधुना पार्थिवान्तः पुराणि ।**
**कृष्णायाः केशपाशः कुपितयमसखो धूमकेतुः कुरूणां ॥ ४२ ॥**

**अन्वयः**—यस्य, मोक्षात्, क्रोधान्धैः, अतुलभुजबलैः पाण्डुपुत्रैः, कुरुनरपतिभिः, प्रत्याशम्, पार्थिवान्तः पुराणि, मुक्तकेशानि, कृतानि, सः, अयम्, कुपितयमसखः, कुरूणाम्, धूमकेतुः, कृष्णायाः, केशपाशः, बद्धः, ( अतः ) प्रजानाम्, निधनम्, विरमतु, राज्ञाम्, कुलेभ्यः, स्वस्ति, ( अस्तु ) ॥ ४२ ॥

आकाशे देवादिभिरुक्तमाह—**क्रोधान्धैरिति ।**

**यस्य**=केशपाशस्य, **मोक्षात्**=मुक्तेः, **क्रोधान्धैः**=अतिकुपितैः, अत एव द्रोणादीनापि वधोऽकारीति भावः । **अतुलभुजबलैः**=अतिपराक्रमिभिः, पाण्डुपुत्रैः, **कुरुनरपतिभिः**=दुर्योधनादिभिः, ( च ) चेन विनापि क्वचित्समुच्चयस्य प्रतीतिर्भवत्येव । **प्रत्याशम्**=प्रतिदिक्, **पार्थिवान्तः पुराणि**=राज्ञां स्त्र्यगाराणि, **मुक्तकेशानि**=अबद्धकचानि, कृतानि, स्वामिनां हननेन स्त्रीणां वैधव्यप्रापणाद् । विधवायाः केशबन्धनस्य निषिद्धत्वादिति भावः । **सः**, **अयम्**=उपस्थितः, **कुपितयमसखः**=क्रुद्धकालस्य सखा, नाशहेतुसाम्यादिति भावः । **कुरूणाम्**, **धूमकेतुः**=उत्पातग्रहतुल्यः 'धूमकेतुः स्मृतो वह्नावुत्पातग्रहभेदयोः' इति विश्वः । **कृष्णायाः**=द्रौपद्याः, **केशपाशः**=

( नेपथ्य में )

भीषण समराग्नि में जलकर बचे हुए राजकुलों का कल्याण हो ।

जिसके छूट जाने से क्रोधान्ध पाण्डुपुत्रों के द्वारा, जिन्होंने राजाओं का संहार किया है, राजराणियों के केशकलाप दिन दिन समग्र दिशाओं में विक्षिप्त हो गए हैं [ राजाओं की रमणियाँ संग्राम में पतियों के मर जाने से केश खोल कर वैधव्यावस्था का अनुभव करती हैं ] वह क्रुद्ध होने पर यमराज का मित्र, कौरवों के लिए धूमकेतु कृष्णा का केशपाश भाग्य से बँध गया । प्रजावर्ग की

दिष्ट्या बद्धः प्रजानां विरमतु निधनं स्वस्ति राज्ञां कुलेभ्यः॥४२॥

युधिष्ठिरः—देवी, एष ते मूर्द्धजानां वेणीसंहारोऽभिनन्द्यते नभस्तलचारिणा सिद्धजनेन ।

(ततः प्रविशतः कृष्णार्जुनौ ।)

कृष्णः—(युधिष्ठिरमुपगम्य ।) विजयतां निहतसकलारातिमण्डलः सानुजो युधिष्ठिरः ।

अर्जुनः—जयत्वार्यः ।

---

चूडा, बद्धः=संयतः, ( अतः ) प्रजानाम्, निधनम्=मरणम्, विरमतु=विरतो भवतु । 'व्याङ्परिभ्यो रमः' इति परस्मैपदम् । राज्ञाम्, कुलेभ्यः=वंशेभ्यः, वा समूहेभ्यः, स्वस्ति=मङ्गलम्, भवत्विति शेषः उत्पातग्रहस्य प्रशमादुत्पातोऽपि शान्तो भवत्विति भावः ।

अत्र द्वितीयचरणे, पाण्डवादिभिर्निखिला भूपतयो हता इति भङ्ग्या प्रतिपादनात्पर्य्यायोक्तमलङ्कारः । स्रग्धरा छन्दः । ॥ ४२ ॥

वेणीसंहारः=केशस्य संयमनम्, अभिनन्द्यते=स्तूयते, आद्रियत इति वा । नभस्तलसञ्चारिणा=आकाशमार्गेण गन्त्रा, सिद्धजनेन=देवगन्धर्वादिना ।

ततः प्रविशतीति-युद्धभूमेः कृष्णार्जुनौ, युधिष्ठिरसविध आगताविति भावः ।

निहतसकलारातिमण्डलः=निहतं विनाशितं सकलारतिमण्डलं निखिलशत्रुसमुदायो येन सः, सानुजः=सावरजः, पाण्डवकुलचन्द्रः=पाण्डवकुले चन्द्र इव ।

---

सत्यानाशी का अब अन्त हो जाय । और राजाओं के वंशों का कल्याण हो ॥४२॥

युधिष्ठिर—कल्याणि ! अन्तरिक्षचारी सिद्धजनों के द्वारा भी आप के केशकलापों के संहार [ सँवारना ] का अभिनन्दन किया गया ।

( इसके अनन्तर कृष्ण और अर्जुन का प्रवेश )

कृष्ण—( युधिष्ठिर के समीप जाकर ) भ्राताओं के सहित युधिष्ठिर की, जिनके सम्पूर्ण शत्रुसमूहों का संहार हो चुका है, विजय हो ।

अर्जुन—आर्य ! विजय ।

युधिष्ठिरः—(विलोक्य ।) **अये, भगवान्पुण्डरीकाक्षो वत्सश्च किरीटी । भगवन् , देव, अभिवादये ।** (किरीटिनं प्रति) **एह्येहि वत्स, परिष्वजस्व माम् ।** ( अर्जुनः प्रणमति । ) (वासुदेवं प्रति) **कुतस्तस्य विजयादन्यद्यस्य भगवान्पुण्डरीकाक्षो नारायणः स्वयं मङ्गलान्याशास्ते ।**

**कृतगुरुमहदादिक्षोभसंभूतमूर्तिं**

---

**एहि** = आगच्छ, **परिष्वजस्व** = आलिङ्गय ।

**प्रतीति**, कथयतीति शेषः । **पुण्डरीकाक्षः** = पुण्डरीकं कमलं तद्वदक्षिणी यस्य सः, **'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्'** इति षच्प्रत्ययः । **'यस्येति च'** इतीकारलोपः । **मङ्गलम्** = शुभम् , **आशास्ते** = इच्छति ।

**अन्वयः**—( हे ) देव !, कृतगुरुमहदादिक्षोभसम्भूतमूर्तिम् , गुणिनम् , प्रजानाम् उदयनाशस्थानहेतुम्, अजम् , अमरम् , अचिन्त्यम् , त्वाम् , चिन्तयित्वा, अपि, जगति, ( जनः ) दुःखी, न, भवति, किम् , पुनः, दृष्ट्वा, ( भविष्यति ! ) ॥ ४३ ॥

**सकलसंसारहेतुभूतस्य** नित्यानन्दपरब्रह्मणस्तव चिन्तनेनापि जनो दुःखनिर्मुक्तो भवति साक्षात्कारे तु दुःखस्य सम्भावनापि नास्तीत्याह—**कृतेति ।**

( हे ) **देव** = संसारचक्रेण क्रीडक ! क्रीडाद्यर्थकदिवधातोः पचादित्वादच्प्रत्ययः । **कृतगुरुमहदादिक्षोभसम्भूतिम्** = कृताः अनित्या ये गुरवः श्रेष्ठाः कारणत्वादिति भावाः । महदादयः महदहङ्कारस्तन्मात्राः प्रकृतिविकृतयः तदुक्तं सांख्यतत्त्वकौमुद्याम्—

**महदाद्याः प्रकृतिविकृतयः सप्त इति,**

**प्रकृतेर्महांस्ततोऽङ्कारः तस्माद्गणश्च षोडशकः** । इति च ।

---

**युधिष्ठिर**—( देखकर ) अये, कमललोचन भगवान् वासुदेव और वत्स अर्जुन । भगवन् , वासुदेव ! साष्टाङ्गपात । ( अर्जुन के प्रति ) प्रिय भ्रात ! आओ आओ मुझसे मिलो ।

( अर्जुन प्रणाम करते हैं ) ( वासुदेव के प्रति ) उस व्यक्ति के लिए, जिसके मङ्गल की कामना पुराणपुरुष भगवान् नारायण करते हैं, विजय के अतिरिक्त दूसरा कैसे हो सकता है ।

हे देव, स्वीय परिणाम से उत्पन्न, गुरु = पृथिवी, जल, तेज, वायु, आकाश

**गुणिनमुदयनाशस्थानहेतुं प्रजानाम् ।**
**अजममरमचिन्त्यं चिन्तयित्वापि न त्वां**

तेषां क्षोभेण परिणामेन, सम्भूता उत्पन्ना मूर्तिः जगत् यत्र तम् , अथवा कृता कल्पिता गुरुमहदादिक्षोभसम्भूतमूर्तिः गुरूणि पञ्चभूतानि, महदादयः अन्तःकरणादितत्त्वानि तेषां क्षोभेण मेलनेन सम्भूता या मूर्तिः शरीरं सा येन तम् , कल्पनिकमेव ते शरीरम् , अतएव '**अरूपमव्ययम्**' इत्यपि संगच्छते शरीरस्य वास्तविकत्वे रूपवत्त्वाद्विनाशित्वाच्चोक्ता श्रुतिर्विरुध्येतेतिभावः । **गुणिनम्** = सत्त्वरजस्तमोगुणोपाध्यवच्छिन्नम् मायाशवलितमित्यर्थः । परब्रह्मणो माया साहाय्येन सृष्टिकरणदितिभावः । अत एव, **प्रजानाम्** = जनानाम् , **उदयनाशस्थानहेतुम्** = उदयः उत्पत्तिः नाशः प्रलयः, स्थानं स्थितिः जीवनमित्यर्थः । तेषां हेतुः उपादानकारणम् तदुक्तं तैत्तिरीये—

यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति,
यत्प्रयन्त्यभिसंविशन्ति । इति ।

त्वमेव जगतामुत्पत्तिस्थितिविनाशकारणमित्यर्थः । **अजम्** = अजन्यम , न तव कदाप्युत्पत्तिरितिभावः । तदुक्तं मुण्डके—

स बाह्याभ्यन्तरो ह्यजः । इति

कठोपनिषदि—

न जायते म्रियते वा विपश्चित् । इति च ।

**अमरम्** = मृत्युरहितं नित्यमित्यर्थः । तदुक्तं प्रश्नोपनिषदि—

स एषोऽजोऽमृतो भवति । इति ।

बृहदारण्यकेऽपि—

तेजोमयोऽमृतमयः पुरुषः । इति ।

त्वमेव परं ब्रह्मेति कथं त्वं जन्यो मृतो वा स्यादितिभावः । **अचिन्त्यम्** =

इत्यादि और महत्तत्त्वादिकों के क्षुब्ध होने से अर्थात् सृष्टि के अनुगुण प्रवृत्ति से सम्भूत मूर्ति अर्थात् अवतार धारण करने वाले गुणिन = सत्व, रज, तमः इत्यादि तीन प्रकार की उपाधियों से विशिष्ट संसार के चर और अचर प्राणियों के जन्म,

**भवति जगति दुःखी किं पुनर्देव दृष्ट्वा ॥ ४३ ॥**

ध्यातुमप्यशक्यम्, तव चिन्तामपि कर्तुं न शक्नुवन्ति जना इतिभावः। तदुक्तं कठोपनिषदि—

न नरेणावरेण प्रोक्त एष विज्ञेयो, बहुधा चिन्त्यमानः। इति,

नैव वाचा न मनसा, प्राप्तुं शक्यो न चक्षुषा। इति।

नैषा तर्केण मतिरापनेया। इति च।

एषा आत्मविषयिणी, आपनेया प्राप्तव्या। **त्वाम्**=परब्रह्मस्वरूपम्, तदुक्तं भागवते—

कृष्णस्तु भगवान् स्वयम्। इति।

**चिन्तयित्वा**=अध्यात्मयोगोधिगमेन ध्यात्वा, यद्यपि पूर्वोक्तश्रुत्या ध्यानविषयोऽपि न त्वं भवितमर्हसि, तथापि अध्यात्मयोगं प्राप्यैव ध्यातुं शक्यस इतिगूढाभिप्रायः। अतएवोक्त तत्रैव,—

अध्यात्मयोगाधिगमेन देवं मत्वा। इति।

अपि, **जगति**—संसारे, इह लोके परलोके वेत्यर्थः। (जनः) **दुःखी**=शोकाकुलः, न, भवति, तदुक्तं छान्दोग्ये—

एतं सेतुमहोरात्रे तरतो, न जरा न, मृत्युर्न शोको न सुकृतं न दुष्कृतम्। इति।

किम्, पुनः, **दृष्ट्वा**=साक्षात्कृत्य, दुःखी भविष्यति न कथमपि दुःखी भविष्यतीत्यर्थः। यस्य चिन्तने, न, दुःखं तस्य दर्शने कथं दुःखं स्यादितिभावः। तदुक्तं कठे—

यस्तु विज्ञानवान् भवति समनस्कः सदा शुचिः।

स तु तत्पदमाप्नोति यस्माद्भूयो न जायते। इति।

अनेन, दुःखकारणस्य जन्मनो निषेधादत्यन्तं दुःखाभावो दर्शितः। कारणाभावे कार्यस्यात्यन्तमसम्भावित्वादितिभावः। अतएवोक्तम्—

तरति शोकमात्मवित्। इति।

आत्मवित् परब्रह्मणः साक्षात्कर्ता। तरणञ्च मरनत्वविरोधीतिविरुद्धयोः एक-

पालन और संहार करने वाले, अजन्मा अमर और ध्यान में न आने वाले अर्थात् आकृतिहीन आपका स्मरण करके ही इस संसार में कोई दुःखी नहीं रह

(अर्जुनमालिङ्ग्य ।) वत्स, परिष्वजस्व माम् ।

कृष्णः—महाराज युधिष्ठिर,

व्यासोऽयं भगवानमी च मुनयो वाल्मीकिरामादयो
धृष्टद्युम्नमुखाश्च सैन्यपतयो माद्रीसुताधिष्ठिताः ।
प्राप्ता मागधमत्स्ययादवकुलैराज्ञाविधेयैः समं
स्कन्धोत्तम्भिततीर्थवारिकलशा राज्याभिषेकाय ते ॥ ४४ ॥

त्रानवस्थानान्न दुःखलेशोऽपीतिभावः । अनेन श्लोकेन युधिष्ठिरस्य ब्रह्मज्ञत्वं सूचितं कविना । अत्र विरोधार्थापत्ती अलङ्कारौ । मालिनी छन्दः ॥ ४३ ॥

**अन्वयः**—अयम् , भगवान् , व्यासः, अमी, वाल्मीकिरामादयः, मुनयः, च, आज्ञाविधेयैः, मागधमत्स्ययादवकुलैः समम् ते, राज्याभिषेकाय, स्कोन्धोत्तम्भिततीर्थवारिकलशाः, माद्रीसुताधिष्ठिताः धृष्टद्युम्नमुखाः, सैन्यपतयः, प्राप्ताः ( अनुपदमेव ) ॥ ४४ ॥

अहं त्वरिततरामायातो व्यासादयोऽपि तव राज्याभिषेकं कर्तुं त्वरितमेवागच्छन्तीति कृष्णः कथयति—**व्यास** इति ।

अयम् **भगवान्**=ईश्वरः, ईश्वरत्वन्तु व्यासस्य,

व्यासाय विष्णुरूपाय व्यासरूपाय विष्णवे । इति वचनात् ।

**व्यासः**=पाराशर्य्यः, अमी, **वाल्मीकिरामादयः**=वाल्मीकिः, एतन्नामको रामचरितस्य रचयिता मुनिविशेषः, **रामः**=परशुरामः तत्प्रभृतयः, मुनयः, **मागधमत्स्ययादवकुलैः**=मगधस्य राजेति मागधः तद्राजेत्यन्वर्थसंज्ञाबलाद्राजन्यपि द्व्ञ्मगधेत्यण् । मत्स्यस्य राजान इति मत्स्याः अत्रापि तेनैवाण् । **तद्राजस्य बहुष्विति**, तस्य लुक् । यादवा यदुवंशजाताः, तेषां कुलैः, **समम्**=सह, साकं सत्रा समं सह **इत्यमरः** । ते, राज्याभिषेकाय, **स्कन्धोत्तम्भितीर्थ**-

सकता और आपका दर्शन हो जाने पर तो कहना ही क्या है ? ॥ ४३ ॥

( अर्जुन से मिलकर ) वत्स ! मुझसे मिलो ।

कृष्ण—महाराज युधिष्ठिर !

ये भगवान् व्यासदेव, वाल्मीकि, परशुराम प्रभृति महर्षि लोग; नकुल सहदेव के नियन्त्रण में धृष्टद्युम्न प्रभृति सेनापति, तथा आज्ञारत मागध, मत्स्य

भवति जगति दुःखी किं पुनर्देव दृष्ट्वा ॥ ४३ ॥

ध्यातुमप्यशक्यम्, तव चिन्तामपि कर्तुं न शक्नुवन्ति जना इतिभावः। तदुक्तं कठोपनिषदि—

न नरेणावरेण प्रोक्त एष विज्ञेयो, बहुधा चिन्त्यमानः। इति,

नैव वाचा न मनसा, प्राप्तुं शक्यो न चक्षुषा। इति।

नैषा तर्केण मतिरापनेया। इति च।

एषा आत्मविषयिणी, आपनेया प्राप्तव्या। त्वाम्=परब्रह्मस्वरूपम्, तदुक्तं भागवते—

कृष्णस्तु भगवान् स्वयम्। इति।

चिन्तयित्वा=अध्यात्मयोगाधिगमेन ध्यात्वा, यद्यपि पूर्वोक्तश्रुत्या ध्यानविषयोऽपि न त्वं भवितमर्हसि, तथापि अध्यात्मयोगं प्राप्यैव ध्यातुं शक्यस इतिगूढाभिप्रायः। अतएवोक्त तत्रैव,—

अध्यात्मयोगाधिगमेन देवं मत्वा। इति।

अपि, जगति—संसारे, इह लोके परलोके वेत्यर्थः। (जनः) दुःखी=शोकाकुलः, न, भवति, तदुक्तं छान्दोग्ये—

एतं सेतुमहोरात्रे तरतो, न जरा न, मृत्युर्न शोको न सुकृतं न दुष्कृतम्। इति।

किम्, पुनः, दृष्ट्वा=साक्षात्कृत्य, दुःखी भविष्यति न कथमपि दुःखी भविष्यतीत्यर्थः। यस्य चिन्तने, न, दुःखं तस्य दर्शने कथं दुःखं स्यादितिभावः। तदुक्तं कठे—

यस्तु विज्ञानवान् भवति समनस्कः सदा शुचिः।

स तु तत्पदमाप्नोति यस्माद्भूयो न जायते। इति।

अनेन, दुःखकारणस्य जन्मनो निषेधादत्यन्तं दुःखाभावो दर्शितः। कारणाभावे कार्यस्यात्यन्तमसम्भावित्वादितिभावः। अतएवोक्तम्—

तरति शोकमात्मवित्। इति।

आत्मवित् परब्रह्मणः साक्षात्कर्ता। तरणञ्च मग्नत्वविरोधीतिविरुद्धयोः एक-

पालन और संहार करने वाले, अजन्मा अमर और ध्यान में न आने वाले अर्थात् आकृतिहीन आपका स्मरण करके ही इस संसार में कोई दुःखी नहीं रह

(अर्जुनमालिङ्ग्य ।) वत्स, परिष्वजस्व माम् ।

कृष्णः—महाराज युधिष्ठिर,

व्यासोऽयं भगवानमी च मुनयो वाल्मीकिरामादयो
धृष्टद्युम्नमुखाश्च सैन्यपतयो माद्रीसुताधिष्ठिताः ।
प्राप्ता मागधमत्स्ययादवकुलैराज्ञाविधेयैः समं
स्कन्धोत्तम्भिततीर्थवारिकलशा राज्याभिषेकाय ते ॥ ४४ ॥

---

त्रानवस्थानान्न दुःखलेशोऽपीतिभावः । अनेन श्लोकेन युधिष्ठिरस्य ब्रह्मज्ञत्वं सूचितं कविना । अत्र विरोधार्थापत्ती अलङ्कारौ । मालिनी छन्दः ॥ ४३ ॥

**अन्वयः**—अयम्, भगवान्, व्यासः, अमी, वाल्मीकिरामादयः, मुनयः, च, आज्ञाविधेयैः, मागधमत्स्ययादवकुलैः समम् ते, राज्याभिषेकाय, स्कोन्धोत्तम्भिततीर्थवारिकलशाः, माद्रीसुताधिष्ठिताः धृष्टद्युम्नमुखाः, सैन्यपतयः, प्राप्ताः ( अनुपदमेव ) ॥ ४४ ॥

अहं त्वरिततरामायातो व्यासादयोऽपि तव राज्याभिषेकं कर्तुं त्वरितमेवागच्छन्तीति कृष्णः कथयति—**व्यास** इति ।

अयम् **भगवान्**=ईश्वरः, ईश्वरत्वन्तु व्यासस्य,

व्यासाय विष्णुरूपाय व्यासरूपाय विष्णवे । इति वचनात् ।

**व्यासः**=पाराशर्यः, अमी, **वाल्मीकिरामादयः**=वाल्मीकिः, एतन्नामको रामचरितस्य रचयिता मुनिविशेषः, **रामः**=परशुरामः तत्प्रभृतयः, **मुनयः**, **मागधमत्स्ययादवकुलैः**=मगधस्य राजेति मागधः तद्राजेत्यन्वर्थसंज्ञाबलाद्राजन्यपि **द्व्यञ्मगधेत्यण्**। मत्स्यस्य राजान इति मत्स्याः अत्रापि तेनैवाण् । **तद्राजस्य बहुष्विति**, तस्य लुक्। यादवा यदुवंशजाताः, तेषां कुलैः, **समम्**=सह, साकं सत्रा समं सह **इत्यमरः**। ते, राज्याभिषेकाय, **स्कन्धोत्तम्भितीर्थ**-

---

सकता और आपका दर्शन हो जाने पर तो कहना ही क्या है ? ॥ ४३ ॥

( अर्जुन से मिलकर ) वत्स ! मुझसे मिलो ।

कृष्ण—महाराज युधिष्ठिर !

ये भगवान् व्यासदेव, वाल्मीकि, परशुराम प्रभृति महर्षि लोग; नकुल सहदेव के नियन्त्रण में धृष्टद्युम्न प्रभृति सेनापति, तथा आज्ञारत मागध, मत्स्य

अहं पुनश्चार्वाकेण रक्षसा व्याकुलीकृतं भवन्तमुपलभ्यार्जुनेन सह त्वरिततरमायातः ।

युधिष्ठिरः—कथं चार्वाकेण रक्षसा वयमेवं विप्रलब्धाः ।

भीमसेनः—(सरोषम् ।) क्वासौ धार्तराष्ट्रसखो राक्षसः पुण्यजनापसदो येनार्यस्य महांश्चित्तविभ्रमः कृतः ।

कृष्णः—निगृहीतः स दुरात्मा नकुलेन । तत्कथय महाराज, किमस्मात्परं समीहितं संपादयामि ।

---

**वारिकलशाः**=स्कन्धेनोत्तम्भिता । उत्थापिताः तीर्थवारिकलशा यैः ते, **माद्रीसुताधिष्ठिताः**=नकुलसहदेवाध्यक्षाः, **धृष्टद्युम्नमुखाः**=द्रुपदपुत्रप्रधानाः, सैन्यपतयश्च, अनुपदमेवेत्यस्याध्याहारः। तथा च ते अनुपदमेव, प्राप्ताः, क्षटित्येवागच्छन्तीति भावः । ननु उपस्थिताः सन्तीत्यर्थो युक्तः, अहं पुन इत्याद्यग्रिमग्रन्थविराधात् पूर्वं तेषामागमने त्वरिततरत्वं विरुध्येतेति । क्वचित्पुस्तकोऽयं श्लोको नास्ति परमत्रैतदर्थकगद्यमेवास्ति । **शार्दूलविक्रीडितं छन्दः** ॥४४॥

**उपलभ्य**=ज्ञात्वा, **त्वरिततरम्**=अतिशीघ्रम् ।

**एवम्**=भीमः पराजित इत्यादिरूपेण, **विप्रलब्धाः**=वञ्चिताः ।

**धार्तराष्ट्रसखः**=दुर्योधनमित्रम्, **राजाहःसखिभ्य** इति टच् । **पुण्यजनापसदः**=राक्षसेषु नीचः पुण्यजनो, नैर्ऋतो यातुराक्षसौ' **इत्यमरः** ।

**निगृहीतः**=बद्धः, **समीहितम्**=अभिलषितम् ।

और यदुवंशियों के साथ कन्धे पर तीर्थजल से पूर्ण कलश रक्खे हुए आपके राज्याभिषेक के लिए आए हुए हैं ॥ ४४ ॥

मैं यह देख कर कि आप चार्वाक् राक्षस के कपटों से व्याकुल हो रहे हैं, अर्जुन को लेकर शीघ्र ही आया हूँ ।

**युधिष्ठिर**—चार्वाक राक्षस के द्वारा किस प्रकार हम लोग प्रतारित हुए ?

**भीमसेन**—( क्रोध पूर्वक ) दुर्योधन का मित्र तथा राक्षसों में नीच राक्षस कहाँ है ? जिसने महाराज को व्याकुल कर दिया ।

**कृष्ण**—नकुल के द्वारा वह दुष्ट पकड़ लिया गया है । अतः कहिए महाराज, इसके अनन्तर अब आप की क्या इच्छा है जो हम लोग करें ।

युधिष्ठिरः— न किंचिन्न ददाति भगवान्प्रसन्नः । अहं तु पुरुषसाधारणया बुद्ध्या संतुष्यामि । न खल्वतः परमभ्यर्थयितुं क्षमः । पश्यतु देवः ।

क्रोधान्धैः सकलं हतं रिपुकुलं पञ्चाक्षतास्ते वयं
पाञ्चाल्या मम दुर्नयोपजनितस्तीर्णो निकारार्णवः ।
त्वं देवः पुरुषोत्तमः सुकृतिनं मामादृतो भाषसे
किं नामान्यदतः परं भगवतो याचे प्रसन्नादहम् ॥४। ॥

**पुरुषसाधारणया**=अल्पया, **अभ्यर्थयितुम्**=याचितुम् ।

**अन्वयः**—क्रोधान्धैः, सकलम्, रिपुकुलम्, हतम्, ते, वयम्, पञ्च, अक्षताः, मम, दुर्नयोपजनितः, पाञ्चाल्याः निकारार्णवः, तीर्णः, देवः पुरुषोत्तमः, आदृतः, त्वम्, सुकृतिनम् माम्, भाषसे, प्रसन्नाद्, भगवतः, अतः, परम्, अन्यत् अहम्, किन्नाम, याचे ॥ ४५ ॥

**क्रोधान्धैरिति** । क्रोधान्धैः अस्माभिरिति शेषः । **रिपुकुलम्**=शत्रुवंशः, **अक्षताः**=कुशलाः, **दुर्नयोपजनितः**= नीत्या द्यूतादिरूपया, उपजनितः उत्पादितः, **निकारार्णवः**=समुद्रतुल्यापमानम्, तीर्णः, अस्माभिरिति भावः । **सुकृतिनम्**=पुण्यवन्तम्, मत्वेतिशेषः । नातः परमभीष्टमस्ति यदहं याच इतिभावः । **शार्दूलविक्रीडितं छन्दः** ॥ ४५ ॥

**युधिष्ठिर**—'भगवान् प्रसन्न होकर कुछ नहीं देते' यह बात तो नहीं है । मैं पुरुषसाधारण की बुद्धि से सन्तुष्ट हो रहा हूँ । इसके आगे याचना करने में मैं समर्थ नहीं हूँ । देखिये भगवन् ! :—

क्रोध के वश होने पर सम्पूर्ण शत्रु वंश का संहार कर लिया और पाँचो भ्राता हम लोग सुरक्षित रह गए ; पाञ्चाली [ द्रौपदी ] ने हम लोगों की दुर्नीति से उत्पन्न पराभव रूप समुद्र को पार कर लिया तथा आप पुरुषोत्तम भगवान् आदर के साथ मुझ सुकृति व्यक्ति से भाषण कर रहे हैं । अब इससे बढ़ कर और दूसरी क्या वस्तु है जिसके लिए मैं भगवन् ! प्रसन्न आप से अभ्यर्थना करूँ ॥ ४५ ॥

प्रीततरश्चेद्भगवांस्तदिदमस्तु ।
अकृपणमतिःकामं जीव्याज्जनः पुरुषायुषं
भवतु भगवन्भक्तिर्द्वैतं विना पुरुषोत्तमे ।
दयितभुवनो विद्वद्बन्धुर्गुणेषु विशेषवि-
त्सततसुकृती भूयाद्भूपः प्रसाधितमण्डलः ॥ ४६ ॥

**प्रीततरः**= अतिप्रसन्नः ।

**अन्वयः**—अकृपणमतिः जनः पुरुषायुषम् कामम् , जीव्यात् , हे । भगवन् , द्वैतम् , विना, पुरुषोत्तमे, भक्तिः, भवतु, दयितभुवनः, विद्वद्बन्धुः, गुणेषु, विशेषवित् , ( भवतु ) सततसुकृती, भूपः, प्रसाधिमण्डलः, ( भवतु ) ॥ ४६ ॥

लोकस्य कल्याणार्थं युधिष्ठिरो वरमभ्यर्थयते—**अकृपणेति** ।

**अकृपणमतिः** =क्षुद्रबुद्धिरहितः, जनः, विशालबुद्धिरिति यावत् , **पुरुषायुषम्** =यावच्छास्त्रे पुरुषस्यायुः निर्धारितं तावत् , शतं वर्षाणीति तु निष्कृष्टार्थः । तदुक्तं श्रुतौ—

शतायु वै पुरुषः, इति ।

**कामम्** =यथेष्टम् , जीव्यात् जीवधातोराशिषि **'आशिषि लिङ्लोटौ'** इति लिङ् (हे) भगवन् , **द्वैतम्**=भेदबुद्धिम् , विना, अद्वैतरूपेणेत्यर्थः । **पुरुषोत्तमे** = पुरुषश्रेष्ठे त्वयि, **भक्तिः** =अनुरागः, जन इत्यस्य विभक्तिविपरिणामेनात्राप्यन्वयः । **भवतु**, संसाराद्विरक्तानामभ्यर्हितत्वात्तदर्थं पूर्वं वरं याचित्वा संसारेष्वासक्तार्थं पश्चाद् याचते—**दयितेति** । **दयितभुवनः**=प्रियसंसारः, **विद्वद्बन्धुः**=पण्डितबान्धवः, सन् गुणेषु **विशेषवित्**=विवेचकः गुणज्ञ इति समुदितार्थः । भवतु । एवं कृते सति विद्वद्भ्यो गुणप्राप्तेर्ज्ञानोदयात्तस्यापि संसारदुःखाद्विमुक्तिः स्यादिति भावः । **सततसुकृती**=सततं पुण्यकर्माचारी, **भूपः**=नृपः, **प्रसाधितमण्डलः** =स्वायत्तीकृतदिङ्मण्डलः, भवतु । पृथिव्यां राजानः पुण्यवन्त एव

यदि भगवान् अधिक प्रसन्न हों तो यह आशीर्वाद दें :—

लोग कृपण और रोगों से व्यथित न होकर पुरुष की आयुर्दाय के अनुकूल जीवित रहें । हे भगवन् ! बिना किसी सन्देह के पुरुषोत्तम भगवान में भक्ति हो । राजा समस्त लोकों से प्रेम करते हुए, विद्वानों का पोषक बनते हुए, और गुणों

कृष्णः—एवमस्तु ।

(इति निष्कान्ताः सर्वे ।)

इति षष्ठोऽङ्कः ।

**समाप्तमिदं वेणिसंहारं नाम नाटकम् ।**

---

भवन्त्विति भावः । हरिणी छन्दः ॥ ४६ ॥

इति प० श्रीरामदेव झा न्यायव्याकरणाचार्येण मैथिलेन विरचितायां प्रबोधिनीव्याख्यायां षष्ठोऽङ्कः ।

---

की महत्ता पर विशेष ध्यान देते हुए सर्वदा समुज्ज्वल कार्य्य कारी हों ॥ ४६ ॥

**कृष्ण**—ऐसा ही हो ।

( यह कह कर सब लोग चले आते हैं )

श्रीब्रह्मार्पणमस्तु ।

इति ।

ग्राम पक्खनपुर, पो० बहरियाबाद जि० गाजीपुर निवासी श्रीआदित्य नारायण पाण्डेय 'शास्त्री'; 'विशारद' के द्वारा अनूदित वेणीसंहार नाटक का छठवाँ अङ्क समाप्त ।

**॥ वेणीसंहारनाटक समाप्त ॥**

**इदं च विदग्धस्निग्धवियोगदुर्मनसा विप्रलपितं तेन कविना—**
**काव्यालापसुभाषितव्यसनिनस्ते राजहंसा गता·**

**विदग्धस्निग्धवियोगदुर्मनसा** =विदग्धाः चतुराः स्निग्धाः वत्सलाः तेषां यो वियोगः, साम्प्रतं गुणज्ञानामेतादृशपुरुषाणामभावादिति भावः। तेन दुर्मनाः दुःखितचेताः तेन, **कविना**=भट्टनारायणेन, **विप्रलपितम्** =दुःखालापः कृतः। साम्प्रतं मन्निर्मितकवितारसास्वादं कः करिष्यतीति, विप्रलापहेतुः।

**अन्वयः** — ते, काव्यालापसुभाषितव्यसनिनः, राजहंसाः, गताः, ताः, गोष्ठ्य, क्षयम्, आगताः, सताम्, वाचः, गुणलवश्लाघ्याः, न, कवीनाम्, सालङ्काररसप्रसन्नमधुराकाराः, गिरः, नाशम्, प्राप्ताः, भूमिवलये, अयन्तु, महान्, प्रबन्धः, जीयात्॥ ४७॥

विप्रलापमेवाह—**काव्यालापेति**। **ते**=प्रसिद्धा राजादयः, **काव्यालापसुभाषितव्यसनिनः**=काव्यानां दोषाभावविशिष्टगुणादिविशिष्टशब्दार्थयुगलानाम्, तदुक्तं काव्यलक्षणं प्रकाशकृता—

**तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि।** इति

तस्यायमर्थः—तत् काव्यम्, शब्दार्थौ, शब्दार्थयुगलमित्यर्थः। नचैवं काव्यपदस्य प्रवृत्तिनिमित्तं व्यासज्यवृत्तिः स्यादिति वाच्यम्, इष्टापत्तेः, आस्वादव्यञ्जकत्वस्योभयत्रापि तुल्यत्वाद्। अतएव काव्यं पठितम्, काव्यं बुद्धमित्युभयविधलोकव्यवहारः संगच्छते। यत्तु रसगङ्गाधरकृता काव्यपदप्रवृत्तिनिमित्तस्य व्यासज्यवृत्तित्वे एकस्मिन् द्वित्वावच्छिन्नप्रतियोगिताकभेदस्य सत्त्वेन एको न द्वौ इति व्यवहारवत्, श्लोकवाक्यं न काव्यमिति व्यवहारापत्तिः। यदि च शब्दार्थप्रत्येकपर्य्याप्तत्वमेव काव्यपदप्रवृत्तिनिमित्तस्य तदैकस्मिन् पद्ये, काव्यद्वयव्यवहारापत्तिः, तस्मात् वेदत्वादिवद् **रमणीयार्थप्रतिपादकः शब्दः काव्यम्**। इति शब्दमात्रनिष्ठत्वमेव काव्यलक्षणस्योक्तम्, तत्तु तत्रैव मर्मप्रकाशटीकायाम् आस्वादव्यञ्जकत्वस्योभयत्राविशेषादित्यादिना अनुभवव्यवहारविरुद्धमिदमिति प्रतिपादितमस्ति, वेदपदप्रवृत्तिनिमित्तस्यापि शब्दार्थोभयवृत्तित्वमेव प्रतिपादितं **'तदधीते तद्वेद'** इति पाणिनिसूत्रे भगवता पतञ्जलिना, यदपि दर्पणकृता—**वाक्यं रसात्मकं** काव्यम्। इति काव्यलक्षणमुक्तं तदपि, आप्र·

स्ता गोष्ठ्यः क्षयमागता गुणलवश्लाघया न वाचः सताम् ।

द्वमूलकमेव रसाभासध्वात्मककाव्येऽव्याप्तेः इष्टापत्तिस्तु न सम्भवति कविसम्प्रदायभङ्गप्रसङ्गात् । अत एव महाकविवर्णितकपिबालचरितान्यपि काव्यानि । त्वन्मते तत्र रसाभावेन काव्यत्वं न स्यात् । यथाकथञ्चित् परम्परया रसस्पर्शस्य काव्यत्वप्रयोजकत्वे, गौश्चरति, मृगो धावति, इत्यादेरपि काव्यत्वमापद्येतेति । दोषविशिष्टेऽतिव्याप्तिवारणाय—**अदोषाविति** लक्षणे निवेशः । नचादोषत्वं यत्किञ्चिद्दोषाभावः, दोषसामान्याभावो वा । **नाद्यः** । यत्किञ्चिद्दोषाभावस्य सर्वत्र सुलभतयाऽव्यावर्तकत्वापत्तेः । **नान्त्यः** । तथाभूतां दृष्ट्वेत्यादेरपि काव्यत्वानापत्तेः, तत्रापि न्यूनपदत्वदोषस्य सत्त्वात् । इष्टापत्तिस्तु न सम्भवति प्रकाशकृतैव तृतीयोल्लासे तथाभूतामित्यत्र काकुसहकृतार्थध्वनित्वस्योक्तत्वादिति वाच्यम् , अदोषेत्यस्य रसोद्बोधविरोधि—दोषाभावे तात्पर्यात् तथा च यत्र यस्य दोषस्य रसोद्बोधविरोधित्वं तद्दोषवत्त्वे न काव्यत्वं यत्र च न तादृग्दोषस्तत्र काव्यत्वमिति सहृदया एव प्रमाणम् । निर्गुणेऽतिव्याप्तिनिरासाय **सगुणाविति** । माधुर्यादिगुणवन्तौ काव्यमित्यर्थः । यद्यपि गुणानां रसमात्रनिष्ठत्वेन शब्दार्थयोर्गुणवत्त्वमसम्भवि, तथापि स्वव्यञ्जकत्वसम्बन्धे तत्र तेषां सत्त्वमिति न काप्यनुपपत्तिः । **निरलङ्कारेऽतिव्याप्तिनिरासाय—अनलङ्कृतीति** । अस्यायमर्थः सर्वत्र सालङ्कारावेव काव्यम् , कुत्रापि स्फुटालङ्काररहितावपि, अलवणा यवागूरितिवद् नञोऽल्पार्थकत्वात् । अत्राल्पत्वमस्फुटत्वमेव । अन्यस्य, निर्वक्तुमशक्यत्वात्—तथाच नीरसेऽपि अस्फुटालङ्कारसत्त्वे काव्यत्वप्रसक्तावपि न कश्चिद्दोषः । प्रदीपकारास्तु—रसादिरलङ्कारश्च द्वयमेव चमत्कारहेतुः, एवञ्च यदि यत्र न रसादिः, न वा स्फुटालङ्कारः तत्र चमत्कारहेतोरभावान्न काव्यत्वमित्याहुः । वयन्तु मन्यामहे—तत्रास्फुटालङ्कार एव चमत्कारहेतुः, अलङ्कारमात्रस्यैव चमत्कारहेतुत्वात् । तत्र स्फुटत्वास्फुटत्वयोरकिञ्चित्करत्वादिति । अत्र युक्तायुक्तत्वे सहृदयाः स्वयमेव विभावयन्त्विति **संक्षेपः** । प्रकृतमनुसरामः ।

एतादृशानाम् काव्यानां य आलापाः सम्भाषणानि तेषु यत्सुभाषितम् , तत्र यद् व्यसनम् आसक्तिः तदस्त्यस्येति **'अत इनिठनौ'** इतीन्प्रत्ययः । ते, **राजहंसाः**= श्रेष्ठराजानः, गताः क्षयमित्यस्यात्राप्यन्वयः । विनष्टा इत्यर्थः । ताः, गोष्ठ्यः विवे-

**सालङ्काररसप्रसन्नमधुराकाराः कवीनां गिरः**
**प्राप्ता नाशमयं तु भूमिवलये जीयात्प्रबन्धो महान् ॥ ४७ ॥**

चकानामित्यादिः । **क्षयम्**=विनाशम् , आगताः । तथाच मत्कवितानां क्षीरवद् गुणग्राहका न केऽपि सन्तीतिभावः । **सताम्**=सज्जनानाम् वाचः, **गुणलवश्लाघ्याः**=गुणस्य लवेन कणेनापि श्लाघ्याः प्रसंशसनीयाः न, भवन्ति, **कवीनाम्**=उत्तमप्रबन्धकर्तृणाम् , **सालङ्काररसप्रसन्नमधुराकाराः**=सालङ्काराः अलङ्कारसहिताः, **अलङ्कारत्वञ्च**—रसादिभिन्नव्यङ्ग्यभिन्नत्वे सति शब्दार्थान्यितरनिष्ठा या विषयित्वसम्बन्धावच्छिन्ना चमत्कृतिजनकतावच्छेदकता तदवच्छेदकत्वम् । भवति च अनुप्रासादिविशिष्टशब्दज्ञानात् , उपमादिविशिष्टार्थज्ञानाच्च चमत्कारोदय इति विषयित्वसम्बन्धावच्छिन्ना चमत्कृतिजनकतावच्छेदकता तादृशे शब्दे अर्थे च तदवच्छेदकत्वमनुप्रासादौ, उपमादौ चेति लक्षणसमन्वयः। व्यङ्ग्ये रसादिभिन्नत्वनिवेशान्न रसवदलङ्कारासंग्रहः । तादृशव्यङ्ग्यभिन्नत्वनिवेशान्न व्यङ्ग्योपमासंग्रहः । रसप्रसन्नाः रसान्विताः अतएव मधुरस्वरूपाः, **गिरः**=उक्तयः, नाशम्, प्राप्ताः, गुणग्राहकव्यक्त्यभावादितिभावः । अतः, **भूमिवलये**=भूमण्डले, **अयम्**=मदीयः **महान्**=रसालङ्कारादिसंयुतः । तुशब्दः पूर्वव्यवच्छेदकः, **प्रबन्धः**=कविता, **जीयात्**=उत्कृष्टेन वर्तताम् । अनेन प्रबन्धेन मम कीर्तिलाभः प्रसन्नता च भवत्विति कवेराशयः । तदुक्तमग्निपुराणे व्यासदेवेन—

निर्दोषं गुणवत्काव्यमलङ्कारैरलङ्कृतम् ।
रसान्वितं कविः कुर्वन् कीर्तिं प्रीतिञ्च विन्दति ॥ इति ।

एतादृशं मदीयमपि काव्यमिति गूढाभिप्रायः । **शार्दूलविक्रीडितं छन्दः** ॥ ४७ ॥

उमरावाङ्गसम्भूतं नरसिंहस्य जन्मदम् ।
मनहरं कुलपतिं नौमि तं प्रपितामहम् ॥ १ ॥
विद्वद्वृन्दविलासिता भगवती संराजते सर्वदा
यत्रास्ते च विशालभाललिता लक्ष्मीः स्वयं सुस्थिरा ।
पुण्ये 'तत्पटसा' ख्यपत्तनवरे श्रीद्वारवङ्गस्थिते
सानन्दं मृदुचेतसा निवसता व्याख्या मया पूरिता ॥ २ ॥

॥ इति प्रबोधिनीव्याख्या समाप्ता ॥

# वेणीसंहारस्थपद्यानामनुक्रमणिका ।


| पद्यानि | पृष्ठाङ्काः |
| --- | --- |
| अकलितमहिमानं | २६७ |
| अकृपणमतिःकामं | ४०८ |
| अक्षतस्य गदापाणेः | २०० |
| अत्रैव किं न विशसेयं | २८८ |
| अद्य प्रभृति वां वृत्तं | ३७६ |
| अद्य मिथ्याप्रतिज्ञो- | १८० |
| अद्यैवावां रणमुपगतौ | २४९ |
| अन्धोऽनुभूतशत- | २६९ |
| अन्योन्यास्फालभिन्न- | ६३ |
| अपि नाम भवेन्मृत्युः | २७० |
| अप्रियाणि करोत्येषः | २८८ |
| अयिकर्ण कर्णसुखदां | २५० |
| अयं पापो यावन्न | १८४ |
| अवसानेऽङ्गराजस्य | २९६ |
| अश्वत्थामा हत इति | १४० |
| असमाप्तप्रतिज्ञेऽपि | ३८० |
| अस्त्रग्रामविधौ कृती | २४० |
| अस्त्रज्वालावलीढ- | १३३ |
| आचार्यस्य त्रिभुवन- | १५१ |
| आजन्मो न वितथं | १४९ |
| आत्मरामा विहित- | ४७ |
| आ शस्त्रग्रहणादकुण्ठ | २९९ |
| आशैशवादनुदिनं | २९१ |
| इन्द्रप्रस्थं वृकप्रस्थं | ३३ |
| इयमस्मदुपाश्रयैक- | ७५ |
| उद्घातक्वणितविलोल- | ११५ |
| उपेक्षितानां मन्दानां | १८१ |
| ऊरू करेण परिघट्टयतः | ३८९ |
| एकस्य तावत्पाकोऽयं | १४४ |
| एकेनापि विनानुजेन | २६० |
| एतज्जलं जलजनील | ३७६ |
| एतेऽपि तस्य कुपितस्य | २३९ |
| एह्यस्मदर्थहततात | १६९ |
| कथमपि न निषिद्धः | १७८ |
| कर्णक्रोधेन युष्मद्विजयि | २९३ |
| कर्णदुःशासनवधात् | ३२९ |
| कर्णाननेन्दुस्मरणात् | २७४ |
| कर्णालिङ्गनदायी वा | २७९ |
| कर्णेन कर्णसुभगं | २९९ |
| कर्ता द्यूतच्छलानां | २८२ |
| कलितभुवना भुक्त- | २६२ |
| कालिन्द्याः पुलिनेषु | ३ |
| काव्यालापसुभाषित- | ४१० |
| किं कण्ठे शिथिली | ७४ |
| किं नो व्यासदिशां | । |
| किं शिष्याद्गुरुद | १३५ |
| कुरु घनोरु पदानि | ९९ |
| कुन्त्या सह युवामद्य | २९४ |
| कुर्वन्त्वाप्ताहतानां | २९२ |
| कुसुमाञ्जलिरपर इव | ८ |
| कृतगुरुमहदादि- | ४०२ |
| कृतमनुमतं दृष्टं वा | १५६ |
| कृष्टा केशेषु भार्या | २८७ |
| कृष्टा येन शिरोरुहे | १८६ |

| पद्यानि | पृष्ठाङ्काः | पद्यानि | पृष्ठाङ्काः |
|---|---|---|---|
| कृष्टा येनासि राज्ञां | ३९७ | तां वत्सलामनभिवाद्य | ३८३ |
| कृष्णा केशेषु कृष्टा | २८५ | तीर्णे भीष्ममहोदधौ | ३०१ |
| कोदण्डज्याकिणाङ्कैः | ११३ | तेजस्वी रिपुहतबन्धु | १६१ |
| कौरव्यवंशदावेऽस्मिन् | ३८ | त्यक्तप्राजनरश्मि- | २६६ |
| क्रोधान्धैः सकलं हतं | ४०७ | त्यक्त्वोत्थितः सरभसं | ३२० |
| क्रोधोद्गूर्णगदस्य नास्ति | ३३३ | त्रस्तं विनापि विषयात् | ३०८ |
| गते भीष्मे हते द्रोणे | २७८ | दग्धुं विश्वं दहन | १३५ |
| गतो येनाद्य त्वं | १४६ | दत्वा द्रोणेन पार्थात् | १९८ |
| गुप्त्या साक्षान्महानलपः | ६४ | दत्वा भयं सोऽतिरथो | १६४ |
| गुरूणां बन्धूनां | ३०९ | दत्वा मे करदीकृता | ३५१ |
| गृहीतं येनासीः | १५० | दायादा न ययोर्बलेन | २५५ |
| ग्रहाणां चरितं स्वप्नो- | ८६ | दिक्षु व्यूढाङ्घ्रिपादः | ९५ |
| चञ्चद्भुजभ्रमितचण्ड | ४२ | दिष्ट्यार्धश्रुतविप्रलम्भ- | ६२ |
| चत्वारो वयमृत्विजः | ५० | दुःशासनस्य रुधिरे | १९० |
| चूर्णिताशेषकौरव्यः | २८५ | दुःशासनस्य हृदय- | २४४ |
| जन्मेन्दोर्विमले कुले | ३१७ | दृष्टः सप्रेम देव्या | ४ |
| जातोऽयमप्रतिकृता | २५१ | देशः सोऽयमराति | १६९ |
| जात्या काममवध्यो- | १७१ | द्रक्ष्यन्ति नचिरात्सुप्तं | २९० |
| जीवत्सु पाण्डुपुत्रेषु | ३७ | धर्मात्मजं प्रति यमौ | १११ |
| जृम्भारम्भाप्रवितत- | ७० | धिक्सानुजं कुरुपति | १४३ |
| ज्ञातिप्रीतिर्मनसि न | ३५३ | धृतराष्ट्रस्य तनयान् | १९ |
| ज्ञेया रहः शङ्कितं | ३०५ | धृतायुधो यावदहं | १८५ |
| ज्वलनः शोकजन्मा | २७५ | निर्लज्जस्य दुरोदर- | ३४८ |
| तथाभूतां दृष्ट्वा | २१ | निर्वाणवैरदहनाः | १४ |
| तद्भीरुत्वं तव मम पुरः | ५७ | निर्वीर्यं गुरुशाप- | १७४ |
| तस्मिन्कौरवभीमयोः | | निर्वीर्यं वा सवीर्यं वा | १७५ |
| तस्मै देहि जलं कृष्णे | ३७१ | निवापाञ्जलिदानेन | १४९ |
| तस्यैव देहरुधिरोक्षित- | ३१६ | निषिद्धैरप्येभिर्लुलित- | १ |
| तस्यैव पाण्डवपशोः- | २०३ | नूनं तेनाद्य वीरेण | ३१० |
| तातस्तव प्रणयवान् | १६६ | नोच्चैः सत्यपि | ५७ |
| तातं शस्त्रग्रहणविमुखं | १५५ | न्यस्ता न भ्रूकुटिर्न | १८ |

| पद्यानि | पृष्ठाङ्काः |
|---|---|
| पङ्के वा सैकते वा | ३०४ |
| पञ्चग्गहद्रालं मंशए | ११९ |
| पञ्चानां मन्यसेऽस्माकं | ३२४ |
| पदे संदिग्ध एवास्मिन् | ३४१ |
| परित्यक्ते देहे रण- | २५३ |
| पर्याप्तनेत्रमचिरोदित- | २३५ |
| पर्यायेण हि दृश्यन्ते | ८५ |
| पाञ्चाल्या मन्युवह्निः | ३१८ |
| पापप्रियस्तव कथं | १८२ |
| पापेन येन हृदयस्य | २७६ |
| पितुर्मूर्ध्नि स्पृष्टे | १९८ |
| पीनाभ्यां मद्भुजाभ्यां | २९० |
| पूर्यन्तां सलिलेन | ३२७ |
| प्रत्यक्षमात्तधनुषां | २५० |
| प्रत्यक्षं हतबन्धूनां | २३६ |
| प्रत्यक्षं हतबान्धवस्य | २६४ |
| प्रयत्नपरिबोधितः | १०२ |
| प्रवृद्धं यद्वैरं मम | ३० |
| प्राप्तावेकरथारूढौ | २८० |
| प्रालेयमिश्रमकरन्द | ६१ |
| प्रियमनुजमपश्यंस्तं | ३८६ |
| प्रेमाबद्धस्तिमित- | १४ |
| बालस्य मे प्रकृति | २०१ |
| भग्नं भीमेन भवतो | १०४ |
| भवति तनय लक्ष्मीः | २७५ |
| भवेदभीष्ममद्रोणं | १६० |
| भीष्मे द्रोणे च निहते | १६१ |
| भूमौ क्षिप्तं शरीरं | ३९३ |
| भूमौ निमग्नचक्रः | २७३ |
| भूयः परिभवक्लान्ति | ६२ |
| भ्रातुस्ते तनयेन | ३९० |

| पद्यानि | पृष्ठाङ्काः |
|---|---|
| मथ्नामि कौरवशतं | ३१ |
| मदकलितकरेणु- | ११९ |
| मद्वियोगभयात्तातः | १४८ |
| मन्थायस्तार्णवाम्भः- | ४३ |
| मम प्राणाधिके | २७१ |
| मम हि वयसा | ३६४ |
| मया पीतं पीतं न तदनु | ३७० |
| मयि जीवति यत्तातः | १६७ |
| महाप्रलयमारुत | १२८ |
| महासमरानल | ४०० |
| मातः किमप्यसदृशं | २५२ |
| मामुद्दिश्य त्यजन् | २७३ |
| यत्तदूर्जितमत्युग्रं | २६ |
| यत्सत्यव्रतभङ्गभीरु | ४८ |
| यदि शस्त्रमुज्झितं | १७७ |
| यदि समरमपास्य | १३३ |
| यद्दुर्योधनपक्षपात- | १३० |
| यद्वैद्युतमिव ज्योतिः | २८ |
| यन्मोचितस्तव पिता | २९१ |
| यस्मिंश्चिरप्रणय- | ७९ |
| युक्तो यथेष्टमुपभोग- | २०३ |
| युष्मच्छासनलङ्घनाहसि | २३ |
| युष्मान्ह्रेपयति | ३९ |
| येनासि तत्र जतु- | ३६३ |
| यो यः शस्त्रं बिभर्ति | १६८ |
| रक्षणीयेन सततं | २०५ |
| रक्षो नाहं न भूतः | ३८८ |
| राज्ञो मानधनस्य | १९० |
| रिपोरास्तां तावत् | ३१ |
| रेणुर्बाधां विधत्ते | १[illegible] |
| लाक्षागृहानलविषान्न | |

| पद्यानि | पृष्ठाङ्काः |
|---|---|
| कृष्टा येनासि राज्ञां | ३९७ |
| कृष्णा केशेषु कृष्टा | २८९ |
| कोदण्डज्याकिणाङ्कैः | ११३ |
| कौरव्यवंशदावेऽस्मिन् | ३८ |
| क्रोधान्धैः सकलं हतं | ४०७ |
| क्रोधोद्गूर्णगदस्य नास्ति | ३३३ |
| गते भीष्मे हते द्रोणे | २७८ |
| गतो येनाद्य त्वं | १४६ |
| गुप्त्या साक्षान्महानलपः | ६४ |
| गुरूणां बन्धूनां | ३०९ |
| गृहीतं येनासीः | १९० |
| ग्रहाणां चरितं स्वप्नो- | ८६ |
| चञ्चद्भुजभ्रमितचण्ड | ४२ |
| चत्वारो वयमृत्विजः | ९० |
| चूर्णिताशेषकौरव्यः | २८९ |
| जन्मेन्दोर्विमले कुले | ३१७ |
| जातोऽयमप्रतिकृता | २९१ |
| जात्या काममवध्यो- | १७९ |
| जीवत्सु पाण्डुपुत्रेषु | ३७ |
| जृम्भारम्भाप्रवितत- | ७० |
| ज्ञातिप्रीतिर्मनसि न | ३९३ |
| ज्ञेया रहः शङ्कितं | ३०९ |
| ज्वलनः शोकजन्मा | २७९ |
| तथाभूतां दृष्ट्वा | २१ |
| तद्भीरुत्वं तव मम पुरः | ५७ |
| तस्मिन्कौरवभीमयोः | |
| तस्मै देहि जलं कृष्णे | ३७९ |
| तस्यैव देहरुधिरोक्षित- | ३९६ |
| तस्यैव पाण्डवपशोः- | २०३ |
| तातस्तव प्रणयवान् | १६६ |
| तातं शस्त्रग्रहणविमुखं | १९९ |
| तां वत्सलामनभिवाद्य | ३८३ |
| तीर्णे भीष्ममहोदधौ | ३०१ |
| तेजस्वी रिपुहतबन्धु | १६१ |
| त्यक्तप्राजनरश्मि- | २६६ |
| त्यक्त्वोत्थितः सरभसं | ३२० |
| त्रस्तं विनापि विषयात् | ३०८ |
| दग्धुं विश्वं दहन | १३९ |
| दत्वा द्रोणेन पार्थात् | १९८ |
| दत्वा भयं सोऽतिरथो | १६४ |
| दत्वा मे करदीकृता | ३९१ |
| दायादा न ययोर्बलेन | २९९ |
| दिक्षु व्यूढाङ्घ्रिपादः | ९९ |
| दिष्ट्यार्धश्रुतविप्रलम्भ- | ६२ |
| दुःशासनस्य रुधिरं | १९० |
| दुःशासनस्य हृदय- | २४४ |
| दृष्टः सप्रेम देव्या | ४ |
| देशः सोऽयमराति | १६९ |
| द्रक्ष्यन्ति नचिरात्सुप्तं | २९० |
| धर्मात्मजं प्रति यमौ | १११ |
| धिक्सानुजं कुरुपतिं | १४३ |
| धृतराष्ट्रस्य तनयान् | १९ |
| धृतायुधो यावदहं | १८९ |
| निर्लज्जस्य दुरोदर- | ३४८ |
| निर्वाणवैरदहनाः | १४ |
| निर्वीर्यं गुरुशाप- | १७४ |
| निर्वीर्यं वा सवीर्यं वा | १७९ |
| निवापाञ्जलिदानेन | १४९ |
| निष्क्रैरण्येभिर्लुलित- | १ |
| नूनं तेनाद्य वीरेण | ३१० |
| नोच्चैः सत्यपि | ९७ |
| न्यस्ता न भ्रूकुटिर्न | १८ |

| पद्यानि | पृष्ठाङ्काः |
|---|---|
| पङ्के वा सैकते वा | ३०४ |
| पञ्चगगहदाणं मंशए | ११९ |
| पञ्चानां मन्यसेऽस्माकं | ३२४ |
| पदे संदिग्ध एवास्मिन् | ३४१ |
| परित्यक्ते देहे रण- | २५३ |
| पर्याप्तनेत्रमचिरोदित- | २३५ |
| पर्यायेण हि दृश्यन्ते | ८५ |
| पाञ्चाल्या मन्युवह्निः | ३१८ |
| पापप्रियस्तव कथं | १८२ |
| पापेन येन हृदयस्य | २७६ |
| पितुर्मूर्ध्नि स्पृष्टे | १९८ |
| पीनाभ्यां मद्भुजाभ्यां | २९० |
| पूर्यन्तां सलिलेन | ३२७ |
| प्रत्यक्षमात्तधनुषां | २५० |
| प्रत्यक्षं हतबन्धूनां | २३६ |
| प्रत्यक्षं हतबान्धवस्य | २६४ |
| प्रयत्नपरिबोधितः | १०२ |
| प्रवृद्धं यद्वैरं मम | ३० |
| प्राप्तावेकरथारूढौ | २८० |
| प्रालेयमिश्रमकरन्द | ६९ |
| प्रियमनुजमपश्यंस्तं | ३८६ |
| प्रेमाबद्धस्तिमित- | ९४ |
| बालस्य मे प्रकृति | २०१ |
| भग्नं भीमेन भवतो | १०४ |
| भवति तनय लक्ष्मीः | २७५ |
| भवेदभीष्ममद्रोणं | १६० |
| भीष्मे द्रोणे च निहते | १६९ |
| भूमौ क्षिप्तं शरीरं | ३९३ |
| भूमौ निमग्नचक्रः | २७३ |
| भूयः परिभवक्लान्ति | ५२ |
| भ्रातुस्ते तनयेन | ३९० |
| मथ्नामि कौरवशतं | ३१ |
| मदकलितकरेणु- | १९९ |
| मद्वियोगभयात्तातः | १४८ |
| मन्थायस्तार्णवाम्भः- | ४३ |
| मम प्राणाधिके | २७१ |
| मम हि वयसा | ३६४ |
| मया पीतं पीतं न तदनु | ३७० |
| मयि जीवति यत्तातः | १६७ |
| महाप्रलयमारुत | १२८ |
| महासमरानल | ४०० |
| मातः किमप्यसदृशं | २५२ |
| मामुद्दिश्य त्यजन् | २७३ |
| यत्तदूर्जितमत्युग्रं | २६ |
| यत्सत्यव्रतभङ्गभीरु | ४८ |
| यदि शस्त्रमुज्झितं | १७७ |
| यदि समरमपास्य | १३३ |
| यद्दुर्योधनपक्षपात- | १३० |
| यद्वैद्युतमिव ज्योतिः | २८ |
| यन्मोचितस्तव पिता | २९१ |
| यस्मिंश्चिरप्रणय- | ७९ |
| युक्तो यथेष्टमुपभोग- | २०३ |
| युष्मच्छासनलङ्घनाहसि | २३ |
| युष्मान्ह्रेपयति | ३९ |
| येनासि तत्र जतु- | ३६३ |
| यो यः शस्त्रं बिभर्ति | १६८ |
| रक्षणीयेन सततं | २०५ |
| रक्षो नाहं न भूतः | ३८८ |
| राज्ञो मानधनस्य | १९५ |
| रिपोरास्तां तावत् | ३९५ |
| रेणुर्बाधां विधत्ते | १०१ |
| लाक्षागृहानलविषान्न | १६ |

| पद्यानि | पृष्ठाङ्काः |
| --- | --- |
| लुहिलाशवपाणमत्तिए | १२० |
| लोलांशुकस्य पवना | १०२ |
| विकिर धवलदीर्घा- | ९० |
| विस्मृत्यास्म न्श्रुति | ३६६ |
| व्यासोऽयं भगवानमी | ४०९ |
| वृषसेनो न ते पुत्रो- | २४३ |
| शक्ष्यामि नो परिघ- | ३१९ |
| शल्यानि व्यपनीय | २४८ |
| शल्येन यथा शल्येन | २६८ |
| शाखारोधस्थगित- | ३६८ |
| शोकं स्त्रीवन्नयन- | २८९ |
| शोचामि शोच्यमपि | २७८ |
| श्रवणाञ्जलिपुटपेयं | ६ |
| श्रुत्वा वधं मम मृपा | १४२ |
| सकलरिपुजयाशा | २८४ |
| स कीचकनिपूदनो- | ३४९ |
| सत्पक्षा मधुरगिरः | १२ |
| सत्यादप्यनृतं श्रेयो- | १८९ |
| स भीरुः शूरो वा | १७६ |
| सर्वथा कथय ब्रह्मन् | ३४२ |
| सहभृत्यगणं सबान्धवं | ६६–६७ |
| सीरीसत्वर | ३४३ |
| सूतो वा सूतपुत्रो वा | १७५ |
| स्त्रीणां हि साहचर्यात् | ४०८ |
| स्मरति न भवान्पीतं | २९८ |
| हते जरति गाङ्गेये | ६२ |
| हत्वा पार्थान्सलिल | २४२ |
| हदमाणुशभामए | ११ |
| हर्लो हेतुः सत्यं | ३७२ |
| हस्ताकृष्टविलोल | १०९ |
| हीयमानाः किल | २९८ |


इति अनुक्रमणिका ।

---

प्राप्तिस्थानम्—

चौखम्बा—संस्कृत—पुस्तकालय,

बनारस सिटी ।